# sharabheshAShTakam



# शरभेशाष्टकम्

## Sanskrit Document Information

Text title : sharabheshAShTakam

File name : sharabheshAShTakam.itx

Category : shiva, aShTaka

Location : doc_shiva

Proofread by : Venkata Subramanian, PSA Easwaran psaeaswaran at gmail.com

Latest update : February 28, 2018

Send corrections to : Sanskrit@cheerful.com



April 28, 2018

*sanskritdocuments.org*

# शरभेशाष्टकम्



श्रीशिव उवाच -
शृणु देवि महागुह्यं परं पुण्यविवर्धनम् ।
शरभेशाष्टकं मन्त्रं वक्ष्यामि तव तत्त्वतः ॥ १॥

ऋषिन्यासादिकं यत्तत्सर्वपूर्ववदाचरेत् ।
ध्यानभेदं विशेषेण वक्ष्याम्यहमतः शिवे ॥ २॥

ध्यानम् -
ज्वलनकुटिलकेशं सूर्यचन्द्राग्निनेत्रं
निशिततरनखाग्रोद्धूतहेमाभदेहम् ।
शरभमथ मुनीन्द्रैः सेव्यमानं सिताङ्गं
प्रणतभयविनाशं भावयेत्पक्षिराजम् ॥ ३॥

अथ स्तोत्रम् -
देवादिदेवाय जगन्मयाय शिवाय नालीकनिभाननाय ।
शर्वाय भीमाय शराधिपाय नमोऽस्तु तुभ्यं शरभेश्वराय ॥ ४॥

हराय भीमाय हरिप्रियाय भवाय शान्ताय परात्पराय ।
मृडाय रुद्राय विलोचनाय नमोऽस्तु तुभ्यं शरभेश्वराय ॥ ५॥

शीतांशुचूडाय दिगम्बराय सृष्टिस्थितिध्वंसनकारणाय ।
जटाकलापाय जितेन्द्रियाय नमोऽस्तु तुभ्यं शरभेश्वराय ॥ ६॥

कलङ्ककण्ठाय भवान्तकाय कपालशूलात्तकराम्बुजाय ।
भुजङ्गभूषाय पुरान्तकाय नमोऽस्तु तुभ्यं शरभेश्वराय ॥ ७॥

शमादिषड्काय यमान्तकाय यमादियोगाष्टकसिद्धिदाय ।
उमाधिनाथाय पुरातनाय नमोऽस्तु तुभ्यं शरभेश्वराय ॥ ८॥

घृणादिपाशाष्टकवर्जिताय खिलीकृतास्मत्पथि पूर्वगाय ।
गुणादिहीनाय गुणत्रयाय नमोऽस्तु तुभ्यं शरभेश्वराय ॥ ९॥

कालाय वेदामृतकन्दलाय कल्याणकौतूहलकारणाय ।
स्थूलाय सूक्ष्माय स्वरूपगाय नमोऽस्तु तुस्तु तुभ्यं शरभेश्वराय ॥ १०॥

पञ्चाननायानिलभास्कराय पञ्चाशदर्णाद्यपराक्षयाय ।
पञ्चाक्षरेशाय जगद्धिताय नमोऽस्तु तुभ्यं शरभेश्वराय ॥ ११॥

नीलकण्ठाय रुद्राय शिवाय शशिमौलिने ।
भवाय भवनाशाय पक्षिराजाय ते नमः ॥ १२॥

परात्पराय घोराय शम्भवे परमात्मने ।
शर्वाय निर्मलाङ्गाय सालुवाय नमो नमः ॥ १३॥

गङ्गाधराय साम्बाय परमानन्दतेजसे ।
सर्वेश्वराय शान्ताय शरभाय नमो नमः ॥ १४॥

वरदाय वराङ्गाय वामदेवाय शूलिने ।
गिरिशाय गिरीशाय गिरिजापतये नमः ॥ १५॥

कनकजठरकोद्यद्रक्तपानोन्मदेन
प्रथितनिखिलपीडानारसिंहेन जाता ।
शरभ हर शिवेश त्राहि नः सर्वपापा-
दनिशमिह कृपाब्धे सालुवेश प्रभो त्वम् ॥ १६॥

सर्वेश सर्वाधिकशान्तमूर्ते कृतापराधानमरानथान्यान् ।
विनीय विश्वविधायि नीते नमोऽस्तु तुभ्यं शरभेश्वराय ॥ १७॥

दंष्ट्रानखोग्रः शरभः सपक्षश्चतुर्भुजश्चाष्टपदः सहेतिः ।
कोटीरगङ्गेन्दुधरो नृसिंहक्षोभापहोऽस्मद्रिपुहास्तु शम्भुः ॥ १८॥

हुङ्कारी शरभेश्वरोऽष्टचरणः पक्षी चतुर्बाहुकः ।
पादाकृष्टनृसिंहविग्रहधरः कालाग्निकोटिद्युतिः ।
विश्वक्षोभहरः सहेतिरनिशं ब्रह्मेन्द्रमुख्यैः स्तुतो
गङ्गाचन्द्रधरः पुरत्रयहरः सद्यो रिपुघ्नोऽस्तु नः ॥ १९॥

मृगाङ्कलाङ्गूलसचञ्चुपक्षो दंष्ट्राननाङ्घ्रिश्च भुजासहस्रः ।
त्रिनेत्रगङ्गेन्दुधरः प्रभाढ्यः पायादपायाच्छरभेश्वरो नः ॥ २०॥

नृसिंहमत्युग्रमतीवतेजःप्रकाशितं दानवभङ्गदक्षम् ।

प्रशान्तिमन्तं विदधाति यो मां सोऽस्मानपायाच्छरभेश्वरोऽवतु नः ॥ २१॥

योऽभूत् सहस्रांशुशतप्रकाशः स पक्षिसिंहाकृतिरष्टपादः ।
नृसिंहसङ्क्षोभशमात्तरूपः पायादपायाच्छरभेश्वरो नः ॥ २२॥

त्वां मन्युमन्तं प्रवदन्ति वेदास्त्वां शान्तिमन्तं मुनयो गृणन्ति ।
दृष्टे नृसिंहे जगदीश्वरे ते सर्वापराधं शरभ क्षमस्व ॥ २३॥

करचरणकृतं वाक्कर्मजं कायजं वा
श्रवणनयनजं वा मानसं वापराधम् ।
विहितमविहितं वा सर्वमेतत्क्षमस्व
शिव शिव करुणाब्धे श्रीमहादेव शम्भो ॥ २४॥

रुद्रः शङ्कर ईश्वरः पशुपतिः स्थाणुः कपर्दी शिवो
वागीशो वृषभध्वजः स्मरहरो भक्तप्रियस्त्र्यम्बकः ।
भूतेशो जगदीश्वरश्च वृषभो मृत्युञ्जयः श्रीपतिः
योऽस्मान् कालगलोऽवतात्पुरहरः शम्भुः पिनाकी हरः ॥ २५॥

यतो नृसिंहं हरसि हर इत्युच्यते बुधैः ।
यतो बिभर्षि सकलं विभज्य तनुमष्टधा ॥ २३॥

अतोऽस्मान् पाहि भगवन्प्रसीद च पुनः पुनः ।
इति स्तुतो महादेवः प्रसन्नो भक्तवत्सलः । २७॥

सुरानाह्लादयामास वरदानैरभीप्सितैः ।
प्रसन्नोऽस्मि स्तवेनाहमनेन विबुधेश्वराः ॥ २८॥

मयि रुद्रे महादेवे भयत्वं भक्तिमूर्जितम् ।
ममांशोऽयं नृसिंहोऽयं मयि भक्ततमस्त्विह ॥ २९॥

इमं स्तवं जपेद्यस्तु शरभेशाष्टकं नरः ।
तस्य नश्यन्ति पापानि रिपवश्च सुरोत्तमाः ॥ ३० ॥

नश्यन्ति सर्वरोगाणि क्षयरोगादिकानि च ।
अशेषग्रहभूतानि कृत्रिमाणि ज्वराणि च ॥ ३१॥

सर्पचोराग्निशार्दूलगजपोत्रिमुखानि च ।
अन्यानि च वनस्थानि नास्ति भीतिर्न संशयः ॥ ३२॥

इत्युक्त्वान्तर्दधे देवि देवान् शरभसालुवः ।

ततस्ते स्व-स्वधामानि ययुराह्लादपूर्वकम् ॥ ३३॥

एतच्छरभकं स्तोत्रं मन्त्रभूतं जपेन्नरः ।
सर्वान्कामानवाप्नोति शिवलोकं च गच्छति ॥ ३४॥

इति श्रीआकाशभैरवकल्पोक्तं प्रत्यक्षसिद्धिप्रदे
उमामहेश्वरसंवादे शरभेशाष्टकस्तोत्रमन्त्रं सम्पूर्णम् ।

Proofread by Venkata Subramanian, PSA Easwaran psaeaswaran at gmail.com

---

*sharabheshAShTakam*

pdf was typeset on April 28, 2018

Please send corrections to *sanskrit@cheerful.com*

